सोऽभ्यगच्छत यक्षेन्द्रमाहूतः पृथिवीपते ।
स्त्रीसरूपो महाराज तस्थौ व्रीडासमन्वितः ॥४४॥
तं शशापाथ संक्रुद्धो धनदः कुरुनन्दन ।
एवमेव भवत्वद्य स्त्रीत्वं पापस्य गुह्यकाः ॥ ४५ ॥
ततोऽब्रवीद्यक्षपतिर्महात्मा
यस्माददास्त्ववमन्येह यक्षान् ।
शिखण्डिनो लक्षणं पापबुद्धे
स्त्रीलक्षणं चाग्रहीः पापकर्मन् ॥ ४६ ॥
अप्रवृत्तं सुदुर्बुद्धे यस्मादेतत्त्वया कृतम् ।
तस्मादद्यप्रभृत्येव स्त्री त्वं सा पुरुषस्तथा ॥ ४७ ॥
ततः प्रसादयामासुर्यक्षा वैश्रवणं किल ।
स्थूणस्यार्थे कुरुष्वान्तं शापस्येति पुनःपुनः ॥४८॥
ततो महात्मा यक्षेन्द्रः प्रत्युवाचानुगामिनः ।
सर्वान् यक्षगणांस्तात शापस्यान्तचिकीर्षया ॥४९॥
शिखण्डिनि हते यक्षाः स्वं रूपं प्रतिपत्स्यते ।
स्थूणो यक्षो निरुद्वेगो भवत्विति महामनाः ॥५०॥
इत्युक्त्वा भगवान्देवो यक्षराजः सुपूजितः ।
प्रययौ सहितः सर्वैर्निमेषान्तरचारिभिः ॥ ५१ ॥
स्थूणस्तु शापं संप्राप्य तत्रैव न्यवसत्तदा ।
समये चागमत्तूर्णं शिखण्डी तं क्षपाचरम् ॥ ५२ ॥
सोऽभिगम्याब्रवीद्वाक्यं प्राप्तोऽस्मि भगवन्निति ।
तमब्रवीत्ततः स्थूणः प्रीतोऽस्मीति पुनःपुनः ॥५३॥
आर्जवेनागतं दृष्ट्वा राजपुत्रं शिखण्डिनम् ।
सर्वमेव यथावृत्तमाचचक्षे शिखण्डिने ॥ ५४ ॥

यक्ष उवाच—

शप्तो वैश्रवणेनाहं त्वत्कृते पार्थिवात्मज ।
गच्छेदानीं यथाकामं चर लोकान्यथासुखम् ॥५५॥
दिष्टमेतत्पुरा मन्ये न शक्यमतिवर्तितुम् ।
गमनं तव चेतो हि पौलस्त्यस्य च दर्शनम् ॥५६॥

भीष्म उवाच—

एवमुक्तः शिखण्डी तु स्थूणयक्षेण भारत ।
प्रत्याजगाम नगरं हर्षेण महता वृतः ॥५७॥
पूजयामास विविधैर्गन्धमाल्यैर्महाधनैः ।
द्विजातीन्देवताश्चैव चैत्यानथ चतुष्पथान् ॥ ५८ ॥
द्रुपदः सह पुत्रेण सिद्धार्थेन शिखण्डिना ।
मुदं च परमां लेभे पाञ्चाल्यः सह बान्धवैः ॥५९॥
शिष्यार्थं प्रददौ चाथ द्रोणाय कुरुपुङ्गव ।
शिखण्डिनं महाराज पुत्रं स्त्रीपूर्विणं तथा ॥ ६० ॥
प्रतिपेदे चतुष्पादं धनुर्वेदं नृपात्मजः ।
शिखण्डी सह युष्माभिर्धृष्टद्युम्नश्च पार्षतः ॥ ६१ ॥
मम त्वेतच्चरास्तात यथावत्प्रत्यवेदयन् ।
जडान्धबधिराकारा ये युक्ता द्रुपदे मया ॥ ६२ ॥
एवमेष महाराज स्त्रीपुमान्द्रुपदात्मजः ।
स संभूतः कुरुश्रेष्ठ शिखण्डी रथसत्तमः ॥ ६३ ॥
ज्येष्ठा काशिपतेः कन्या अंबानामेति विश्रुता ।
द्रुपदस्य कुले जाता शिखण्डी भरतर्षभ ॥ ६४ ॥
नाहमेनं धनुष्पाणिं युयुत्सुं समुपस्थितम् ।
मुहूर्तमपि पश्येयं प्रहरेयं न चाप्युत ॥ ६५ ॥
व्रतमेतन्मम सदा पृथिव्यामपि विश्रुतम् ।
स्त्रियां स्त्रीपूर्वके चैव स्त्रीनाम्नि स्त्रीसरूपिणि ॥६६॥
न मुञ्चेयमहं बाणमिति कौरवनन्दन ।
न हन्यामहमेतेन कारणेन शिखण्डिनम् ॥ ६७ ॥
एतत्तत्त्वमहं वेद जन्म तात शिखण्डिनः
ततो नैनं हनिष्यामि समरेष्वाततायिनम् ॥ ६८ ॥
यदि भीष्मः स्त्रियं हन्यात्सन्तः कुर्युर्विगर्हणम् ।
नैनं तस्माद्धनिष्यामि दृष्ट्वापि समरे स्थितम् ॥६९॥

---

[ सर्व० ] आगमः परीक्षा ॥ २७ ॥

[ नील० ] चतुष्पादं ग्रहणधारणप्रयोगप्रतीकारैश्चतुर्भिः पादैर्युक्तम् ॥ ६१ ॥

[ अर्जु० ] दृष्टं विधिना पुरा सृष्टिकाले इतो मत्स्थानात् मम पुंस्त्वं गृहीत्वा ते गमनं पौलस्त्यस्य धनदस्यागमनं शापो मम शापप्राप्तिरिति यावत् । दिष्टमिति पाठे भागधेयं तव पुरा पुरातनम् ॥ ५६ ॥ महाधनैः सुधा-द्विभिः । चैत्यान् ग्राममध्ये पूजितान् वृक्षान् ॥ ५८ ॥ चतुष्पादं दृढदुष्करकल्पचित्रम् (?)॥ ६१ ॥ जडान्धबधिराणामिवाकारो व्यञ्जकभावो येषां ते ॥ ६२ ॥

[ सर्व० ] पाण्डवैः सह शिक्षार्थं प्रददावित्यन्वयः । नतु मुदं लेभे; पाण्डवानां तेन सह संबन्धाभावात् ॥५९॥ चतुष्पादं दृढपुष्करभेदयरूपम् (?)॥ ६१ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां
द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

वैशंपायन उवाच—
एतच्छ्रुत्वा तु कौरव्यो राजा दुर्योधनस्तदा ।
मुहूर्तमिव स ध्यात्वा भीष्मे युक्तममन्यत ॥ ७० ॥

इति श्रीमहाभारते उद्योगपर्वणि द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

## त्रिनवत्यधिकशततमोऽध्यायः १९३

परसेनां कियता कालेन हनिष्यथेति पृष्टैर्भीष्मद्रोणकृपद्रौणिकर्णैः क्रमेण मासमासद्वयपञ्चरात्रपक्षदिनैरिति प्रतिज्ञानम् ॥ १ ॥ भीष्मेण कर्णस्योपहासः ॥ २ ॥

संजय उवाच—
प्रभातायां तु शर्वर्यां पुनरेव सुतस्तव ।
मध्ये सर्वस्य सैन्यस्य पितामहमपृच्छत ॥ १ ॥
पाण्डवेयस्य गाङ्गेय यदेतत्सैन्यमुद्यतम् ।
प्रभूतनरनागाश्वं महारथसमाकुलम् ॥ २ ॥
भीमार्जुनप्रभृतिभिर्महेष्वासैर्महाबलैः ।
लोकपालसमैर्गुप्तं धृष्टद्युम्नपुरोगमैः ॥ ३ ॥
अप्रधृष्यमनावार्यमुद्धृतमिव सागरम् ।
सेनासागरमक्षोभ्यमपि देवैर्महाहवे ॥ ४ ॥
केन कालेन गाङ्गेय क्षपयेथा महाद्युते ।
आचार्यो वा महेष्वासः कृपो वाऽपि महाबलः ॥ ५ ॥
कर्णो वा समरश्लाघी द्रौणिर्वा द्विजसत्तमः ।
दिव्यास्त्रविदुषः सर्वे भवन्तो हि बले मम ॥ ६ ॥
एतदिच्छाम्यहं ज्ञातुं परं कौतूहलं हि मे ।
हृदि नित्यं महाबाहो वक्तुमर्हसि तन्मम ॥ ७ ॥

भीष्म उवाच—
अनुरूपं कुरुश्रेष्ठ त्वय्येतत्पृथिवीपते ।
बलाबलममित्राणां तेषां यदिह पृच्छसि ॥ ८ ॥
शृणु राजन्मम रणे या शक्तिः परमा भवेत् ।
शस्त्रवीर्यं रणे यच्च भुजयोश्च महाभुज ॥ ९ ॥
आर्जवेनैव युद्धेन योद्धव्य इतरो जनः ।
मायायुद्धेन मायावी इत्येतद्धर्मनिश्चयः ॥ १० ॥
हन्यामहं महाभाग पाण्डवानामनीकिनीम् ।
दिवसे दिवसे कृत्वा भागं प्राग्राह्णिकं मम ॥ ११ ॥
योधानां दशसाहस्रं कृत्वा भागं महाद्युते ।
सहस्रं रथिनामेकमेष भागो मतो मम ॥ १२ ॥
अनेनाहं विधानेन सन्नद्धः सततोत्थितः ।
क्षपयेयं महत्सैन्यं कालेनानेन भारत ॥ १३ ॥
मुञ्चेयं यदि चास्त्राणि महान्ति समरे स्थितः ।
शतसाहस्रघातीनि हन्यां मासेन भारत ॥ १४ ॥

संजय उवाच—
श्रुत्वा भीष्मस्य तद्वाक्यं राजा दुर्योधनस्ततः ।
पर्यपृच्छत राजेन्द्र द्रोणमङ्गिरसां वरम् ॥ १५ ॥
आचार्य केन कालेन पाण्डुपुत्रस्य सैनिकान् ।
निहन्या इति तं द्रोणः प्रत्युवाच हसन्निव ॥ १६ ॥
स्थविरोऽस्मि महाबाहो मन्दप्राणविचेष्टितः ।
शस्त्राग्निना निर्दहेयं पाण्डवानामनीकिनीम् ॥ १७ ॥
यथा भीष्मः शान्तनवो मासेनेति मतिर्मम ।
एषा मे परमा शक्तिरेतन्मे परमं बलम् ॥ १८ ॥

---

[ नील० ] युक्तं स्त्रीषु अयुद्धमिति शेषः ॥ ७० ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

[ अर्जु० ] युक्तमुचितम् ॥ ७० ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

[ नील० ] प्रभातायामिति ॥ १ ॥ प्राग्राह्णिकं अह्नः पूर्वभागकार्यम् ॥ ११ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

[ अर्जु० ] प्रभातायां तु शर्वर्यामित्यादेः सहस्रायुतशो न वा इत्यन्तस्य स्वपरसैन्ययोर्बलाबले तात्पर्यम् ॥ १ ॥ इतरोऽवक्रः ॥ १० ॥ प्राग्राह्णिकमप्यह्नि प्रथमकार्यम् ॥ ११ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

[ सर्व० ] प्राग्राह्णिकं अह्नः पूर्वभागकार्यम् ॥ ११ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

[ लक्षा० ] भागाधिकं ममेत्यत्र मम भागाधिक्यमेकदिनस्य दशसहस्रात्मकभागे नियमाये यदधिकं सैन्यं तद्दिवसे दिवसे भागान् कृत्वा हन्याम् । एवं भागे नियमाणे यावन्ति दिनानि भवन्ति तावद्भिर्हन्यामिति भावः ॥ १० ॥

द्वाभ्यामेव तु मासाभ्यां कृपः शारद्वतोऽब्रवीत् ।
द्रौणिस्तु दशरात्रेण प्रतिजज्ञे बलक्षयम् ॥ १९ ॥
कर्णस्तु पञ्चरात्रेण प्रतिजज्ञे महास्त्रवित् ।
तच्छ्रुत्वा सूतपुत्रस्य वाक्यं सागरगासुतः ॥ २० ॥
जहास सस्वनं हासं वाक्यं चेदमुवाच ह ।
नहि यावद्रणे पार्थं बाणखड्गधनुर्धरम् ॥ २१ ॥
वासुदेवसमायुक्तं रथेनायान्तमाहवे ।
समागच्छसि राधेय तेनैवमभिमन्यसे ।
शक्यमेवं च भूयश्च त्वया वक्तुं यथेष्टतः ॥ २२ ॥

इति श्रीमहाभारते उद्योगपर्वणि त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

## चतुर्नवत्यधिकशततमोऽध्यायः १९४

युधिष्ठिरेण पृष्टोऽर्जुनेन. पाशुपतास्त्रेण त्रीनपि लोकान्निमिषेण हन्तुं शक्यत्वेऽपि आर्जवेनैव युद्धेन परान्जेष्याम इत्युक्त्वा स्वीयानां पराक्रमवर्णनम् ॥ १ ॥

वैशंपायन उवाच—
एतच्छ्रुत्वा तु कौन्तेयः सर्वान्भ्रातॄनुपह्वरे ।
आहूय भरतश्रेष्ठ इदं वचनमब्रवीत् ॥ १ ॥
युधिष्ठिर उवाच—
धार्तराष्ट्रस्य सैन्येषु ये चारपुरुषा मम ।
ते प्रवृत्तिं प्रयच्छन्ति ममेमां व्युषितां निशाम् ॥ २ ॥
दुर्योधनः किलापृच्छदापगेयं महाव्रतम् ।
केन कालेन पाण्डूनां हन्याः सैन्यमिति प्रभो ॥ ३ ॥
मासेनेति च तेनोक्तो धार्तराष्ट्रः सुदुर्मतिः ।
तावता चापि कालेन द्रोणोऽपि प्रतिजज्ञिवान् ॥ ४ ॥
गौतमो द्विगुणं कालमुक्तवानिति नः श्रुतम् ।
द्रौणिस्तु दशरात्रेण प्रतिजज्ञे महास्त्रवित् ॥ ५ ॥
तथा दिव्यास्त्रवित्कर्णः संपृष्टः कुरुसंसदि ।
पञ्चभिर्दिवसैर्हन्तुं स सैन्यं प्रतिजज्ञिवान् ॥ ६ ॥
तस्मादहमपीच्छामि श्रोतुमर्जुन ते वचः ।
कालेन कियता शत्रून्क्षपयेरिति फाल्गुन ॥ ७ ॥
एवमुक्तो गुडाकेशः पार्थिवेन धनंजयः ।
वासुदेवं समीक्ष्येदं वचनं प्रत्यभाषत ॥ ८ ॥
सर्व एते महात्मानः कृतास्त्राश्चित्रयोधिनः ।
असंशयं महाराज हन्युरेव न संशयः ॥ ९ ॥
अपैतु ते मनस्तापो यथा सत्यं ब्रवीम्यहम् ।
हन्यामेकरथेनैव वासुदेवसहायवान् ॥ १० ॥
सामरानपि लोकांस्त्रीन्सर्वान्स्थावरजङ्गमान् ।
भूतं भव्यं भविष्यं च निमेषादिति मे मतिः ॥ ११ ॥
यत्तद्घोरं पशुपतिः प्रादादस्त्रं महन्मम ।
कैराते द्वन्द्वयुद्धे तु तदिदं मयि वर्तते ॥ १२ ॥
यद्युगान्ते पशुपतिः सर्वभूतानि संहरन् ।
प्रयुङ्क्ते पुरुषव्याघ्र तदिदं मयि वर्तते ॥ १३ ॥
तन्न जानाति गाङ्गेयो न द्रोणो न च गौतमः ।
न च द्रोणसुतो राजन्कुत एव तु सूतजः ॥ १४ ॥
न तु युक्तं रणे हन्तुं दिव्यैरस्त्रैः पृथग्जनम् ।
आर्जवेनैव युद्धेन विजेष्यामो वयं परान् ॥ १५ ॥
तथेमे पुरुषव्याघ्राः सहायास्तव पार्थिव ।
सर्वे दिव्यास्त्रविद्वांसः सर्वे युद्धाभिकाङ्क्षिणः ॥ १६ ॥
वेदान्तावभृथस्नाताः सर्व एतेऽपराजिताः ।
निहन्युः समरे सेनां देवानामपि पाण्डव ॥ १७ ॥
शिखण्डी युयुधानश्च धृष्टद्युम्नश्च पार्षतः ।
भीमसेनो यमौ चोभौ युधामन्यूत्तमौजसौ ॥ १८ ॥

---

[ लक्षा० ] समागच्छसि राधेयेत्यत्र यावत् यदा समागच्छसि तावत्तदा त्वं नैनमनभन्यसे ॥ २२ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

[ नील० ] एतच्छ्रुत्वेति ॥ १ ॥ व्युषितां निशां प्रभातकाले ॥ २ ॥ भूतमुत्पन्नं भव्यमुत्पाद्यमानमनयोर्बीजभूतयोर्नाशे बीजाभावाद्भविष्यस्यापि नाशो मयैव कर्तव्य इत्यर्थः ॥ ११ ॥ वेदान्तावभृथस्नाताः वेदग्रहणान्त एव दारक्रियया सहैव यागं कृतवन्त इत्यर्थः ॥ १७ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

[ अर्जु० ] उपह्वरे एकान्ते ॥ १ ॥ प्रवृत्तिं वार्तां व्युषिता निशां प्रभाते प्रयच्छन्ति कथयन्ति ॥ २ ॥ पृथग्जनमनस्त्रविदम् ॥ १५ ॥ वेदान्तावभृथस्नाताः । वेदस्यान्ते समाप्तौ योऽवभृथस्तत्र स्नाताः ॥ १७ ॥

[ सर्व० ] व्युषितां निशां प्रभातसमये उषसि ॥ २ ॥

विराटद्रुपदौ चोभौ भीष्मद्रोणसमौ युधि ।
शङ्खश्चैव महाबाहुर्हैडिम्बश्च महाबलः ॥ १९ ॥
पुत्रोऽस्याञ्जनपर्वा तु महाबलपराक्रमः ।
शैनेयश्च महाबाहुः सहायो रणकोविदः ॥ २० ॥
अभिमन्युश्च बलवान् द्रौपद्याः पञ्च चात्मजाः ।
स्वयं चापि समर्थोऽसि त्रैलोक्योत्सादनेऽपि च २१
क्रोधाद्यं पुरुषं पश्येस्तथा शक्रसमद्युते ।
स क्षिप्रं न भवेद्व्यक्तमिति त्वां वेद्मि कौरव ॥ २२ ॥

इति श्रीमहाभारते उद्योगपर्वणि चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

## पञ्चनवत्यधिकशततमोऽध्यायः १९५

धार्तराष्ट्रसैनिकानां युद्धार्थं नगरान्निष्क्रम्य शिबिरप्रवेशः ॥ १ ॥

**वैशंपायन उवाच—**
ततः प्रभाते विमले धार्तराष्ट्रेण चोदिताः ।
दुर्योधनेन राजानः प्रययुः पाण्डवान्प्रति ॥ १ ॥
आप्लाव्य शुचयः सर्वे स्रग्विणः शुक्लवाससः ।
गृहीतशस्त्रा ध्वजिनः स्वस्ति वाच्य हुताग्नयः ॥२॥
सर्वे ब्रह्मविदः शूराः सर्वे सुचरितव्रताः ।
सर्वे कामकृतश्चैव सर्वे चाहवलक्षणाः ॥ ३ ॥
आहवेषु पराँल्लोकान् जिगीषन्तो महाबलाः ।
एकाग्रमनसः सर्वे श्रद्दधानाः परस्परम् ॥ ४ ॥
विन्दानुविन्दावावन्त्यौ केकया बाह्लिकैः सह ।
प्रययुः सर्व एवैते भारद्वाजपुरोगमाः ॥ ५ ॥
अश्वत्थामा शान्तनवः सैन्धवोऽथ जयद्रथः ।
दाक्षिणात्याः प्रतीच्याश्च पार्वतीयाश्च ये नृपाः॥६॥
गान्धारराजः शकुनिः प्राच्योदीच्याश्च सर्वशः ।
शकाः किराता यवनाः शिबयोऽथ वसातयः ॥७॥
स्वैः स्वैरनीकैः सहिताः परिवार्य महारथम् ।
एते महारथाः सर्वे द्वितीये निर्ययुर्बले ॥ ८ ॥
कृतवर्मा सहानीकस्त्रिगर्तश्च महारथः ।
दुर्योधनश्च नृपतिर्भ्रातृभिः परिवारितः ॥ ९ ॥
शलो भूरिश्रवाः शल्यः कौसल्योऽथ बृहद्रथः ।
एते पश्चादनुगता धार्तराष्ट्रपुरोगमाः ॥ १० ॥
ते समेत्य यथान्यायं धार्तराष्ट्रा महाबलाः ।
कुरुक्षेत्रस्य पश्चार्धे व्यवातिष्ठन्त दंशिताः ॥ ११ ॥
दुर्योधनस्तु शिबिरं कारयामास भारत ।
यथा हास्तिनपुरं द्वितीयं समलंकृतम् ॥ १२ ॥
न विशेषं विजानन्ति पुरस्य शिबिरस्य वा ।
कुशला अपि राजेन्द्र नरा नगरवासिनः ॥ १३ ॥
तादृशान्येव दुर्गाणि राज्ञामपि महीपतिः ।
कारयामास कौरव्यः शतशोऽथ सहस्रशः ॥ १४ ॥
पञ्चयोजनमुत्सृज्य मण्डलं तद्रणाजिरम् ।
सेनानिवेशांस्ते राजन्नाविशञ्छतसङ्घशः ॥ १५ ॥
तत्र ते पृथिवीपाला यथोत्साहं यथाबलम् ।
विविशुः शिबिराण्यत्र द्रव्यवन्ति सहस्रशः ॥ १६ ॥

वेदान्ते वेदाध्ययनान्ते व्रते स्नात्वा इत्यवभृथे स्नात्वाः । कालेनानेन द्वित्रिमासावधिना । भूतभव्ययोस्तत्सत्ताकाले ह्यनस्यापेक्षितत्वम् ॥ ३ ॥

इति श्रीमहाभारते उद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

[ लक्षा० ] वेदान्तावभृथस्नाता इत्यत्र वेदोक्तकर्मणामन्ते अवभृथस्नाता इत्यर्थः ॥ १७ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

[ अर्जु० ] अस्य घटोत्कचस्य ॥ २० ॥

इति श्रीमन्महाभारते व्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

[ नील० ] ततः प्रभाते इति ॥ १ ॥ आप्लाव्य स्नात्वा ॥ २ ॥ उत्सृज्य दूरस्थं त्यक्त्वा पञ्चयोजनं वर्तुलं परिधिं कृत्वेत्यर्थः । सेनानिवेशाः सैनिकाः वणिक्सूतादयः १५

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

[ अर्जु० ] आप्लाव्य स्नात्वा । स्वस्ति वाच्य द्विजान् इति शेषः ॥ २ ॥ आहितलक्षणाः प्रख्यातचिह्नाः ॥३॥ महारथं भीष्मम् ॥ ८ ॥

[ सर्व० ] आप्लाव्य स्नात्वा ॥ २ ॥ आहितलक्षणा धृतराष्ट्रचिह्नाः ॥ ३ ॥

[ लक्षा० ] कुरुक्षेत्रस्य पश्चार्ध इत्यत्र पश्चाद्भागस्य अर्धे पूर्वभागे ॥ ११ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

तेषां दुर्योधनो राजा ससैन्यानां महात्मनाम् ।
व्यादिदेश सवाह्यानां भक्ष्यभोज्यमनुत्तमम् ॥१७॥
सनागाश्वमनुष्याणां ये च शिल्पोपजीविनः ।
ये चान्येऽनुगतास्तत्र सूतमागधवन्दिनः ॥ १८ ॥
वणिजो गणिकाधारा ये चैव प्रेक्षका जनाः ।
सर्वांस्तान् कौरवो राजा विधिवत्प्रत्यवैक्षत ॥ १९ ॥

इति श्रीमहाभारते उद्योगपर्वणि पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

## षण्णवत्यधिकशततमोऽध्यायः १९६

युधिष्ठिरेण सेनां विभज्य सेनापतिसत्करणम् ॥ १ ॥

वैशंपायन उवाच—
तथैव राजा कौन्तेयो धर्मपुत्रो युधिष्ठिरः ।
धृष्टद्युम्नमुखान्वीरांश्चोदयामास भारत ॥ १ ॥
चेदिकाशिकरूपाणां नेतारं दृढविक्रमम् ।
सेनापतिममित्रघ्नं धृष्टकेतुमथादिशत् ॥ २ ॥
विराटं द्रुपदं चैव युयुधानं शिखण्डिनम् ।
पाञ्चाल्यौ च महेष्वासौ युधामन्यूत्तमौजसौ ॥ ३ ॥
ते शूराश्चित्रवर्माणस्तप्तकुण्डलधारिणः ।
आज्यावसिक्ता ज्वलिता धिष्ण्येष्विव हुताशनाः ४
अशोभन्त महेष्वासा ग्रहाः प्रज्वलिता इव ।
अथ सैन्यं यथायोगं पूजयित्वा नरर्षभः ॥ ५ ॥
दिदेश तान्यनीकानि प्रयाणाय महीपतिः ।
तेषां युधिष्ठिरो राजा ससैन्यानां महात्मनाम् ॥ ६ ॥
व्यादिदेश सवाह्यानां भक्ष्यभोज्यमनुत्तमम् ।
सगजाश्वमनुष्याणां ये च शिल्पोपजीविनः ॥ ७ ॥
अभिमन्युं बृहन्तं च द्रौपदेयांश्च सर्वशः ।
धृष्टद्युम्नमुखानेतान् प्राहिणोत्पाण्डुनन्दनः ॥ ८ ॥
भीमं च युयुधानं च पाण्डवं च धनंजयम् ।
द्वितीयं प्रेषयामास वलस्कन्धं युधिष्ठिरः ॥ ९ ॥
भाण्डं समारोपयतां चरतां संप्रधावताम् ।
हृष्टानां तत्र योधानां शब्दो दिवमिवास्पृशत् १०
स्वयमेव ततः पश्चाद्विराटद्रुपदान्वितः ।
अथापरैर्महीपालैः सह प्रायान्महीपतिः ॥ ११ ॥
भीमधन्वायनी सेना धृष्टद्युम्नेन पालिता ।
गङ्गेव पूर्णास्तिमिता स्यन्दमाना व्यदृश्यत ॥ १२ ॥
ततः पुनरनीकानि न्ययोजयत बुद्धिमान् ।
मोहयन् धृतराष्ट्रस्य पुत्राणां बुद्धिनिश्चयम् ॥ १३ ॥
द्रौपदेयान्महेष्वासानभिमन्युं च पाण्डवः ।
नकुलं सहदेवं च सर्वांश्चैव प्रभद्रकान् ॥ १४ ॥
दश चाश्वसहस्राणि द्विसहस्राणि दन्तिनाम् ।
अयुतं च पदातीनां रथाः पञ्चशतं तथा ॥ १५ ॥
भीमसेनस्य दुर्धर्षं प्रथमं प्रादिशद्बलम् ।
मध्यमे च विराटं च जयत्सेनं च पाण्डवः ॥ १६ ॥
महारथौ च पाञ्चाल्यौ युधामन्यूत्तमौजसौ ।
वीर्यवन्तौ महात्मानौ गदाकार्मुकधारिणौ ॥ १७ ॥
अन्वयातां तदा मध्ये वासुदेवधनंजयौ ।
बभूवुरतिसंरब्धाः कृतप्रहरणा नराः ॥ १८ ॥
तेषां विंशतिसाहस्रा हयाः शूरैरधिष्ठिताः ।
पञ्च नागसहस्राणि रथवंशाश्च सर्वशः ॥ १९ ॥

---

[अर्जु०] वारा वारविलासिन्यः वेश्या इत्यर्थः ॥१९॥
इति श्रीम० अर्जु० उद्यो० पञ्चनवत्यधिकशततमोऽध्याय ॥ १९५ ॥
[ सर्व० ] दारा वारस्त्रियः ॥ १९ ॥
इति श्रीम० उद्यो० सर्व० पञ्चनवत्यधिकशततमोऽध्याय ॥ १९५ ॥

[ नील० ] तथैवेति ॥ १ ॥ चलस्कन्धं सैन्यसमुदायम् ॥ ९ ॥ भाण्डं युद्धोपकरणम् ॥ १० ॥ भीमधन्वानि अयन्ते प्रचरन्त्यस्यामिति भीमधन्वायनी ॥१२॥ कृतप्रहरणाः कृतयुद्धाः ॥ १८ ॥
[ अर्जु० ] धिष्ण्येषु अग्निहोत्रादिकुण्डस्थानेषु ॥४॥
चलस्कन्धं सेनासमूहम् ॥ ९ ॥ भाण्डं युद्धोपकरणं, हयादीनां चरताम् ॥ १० ॥ चरमं पश्चात् । भीमधन्वायती सेना भीमधन्वभिवायती दैर्घ्यं वा यस्याः (?) ॥१२॥
[ सर्व० ] स्कन्धम् समूहम् ॥ ९ ॥ भाण्डमुपकरणम् ॥ १० ॥ बुद्धिनिःस्रवं बुद्धेर्विषयं प्रतिस्रवम् ॥ १३ ॥ द्रौपदेयानित्यादिना योजयत इति क्रियान्वयः ॥ १४ ॥
[ लक्षा० ] भाण्डं समारोपयतामित्यत्र भाण्डं युद्धोपकरणम् ॥ १० ॥ आयती आयामवती ॥ १२ ॥
इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

पदातयश्च ये शूराः कार्मुकासिगदाधराः ।
सहस्रशोऽन्वयुः पश्चादग्रतश्च सहस्रशः ॥ २० ॥
युधिष्ठिरो यत्र सैन्ये स्वयमेव बलार्णवे ।
तत्र ते पृथिवीपाला भूयिष्ठं पर्यवस्थिताः ॥ २१ ॥
तत्र नागसहस्राणि हयानामयुतानि च ।
तथा रथसहस्राणि पदातीनां च भारत ॥ २२ ॥
चेकितानः स्वसैन्येन महता पार्थिवर्षभ ।
धृष्टकेतुश्च चेदीनां प्रणेता पार्थिवो ययौ ॥ २३ ॥
सात्यकिश्च महेष्वासो वृष्णीनां प्रवरो रथः ।
वृतः शतसहस्रेण रथानां प्रणुदन्बली ॥ २४ ॥
क्षत्रदेवब्रह्मदेवौ रथस्थौ पुरुषर्षभौ ।
जघनं पालयन्तौ च पृष्ठतोऽनुप्रजग्मतुः ॥२५ ॥
शकटापणवेशाश्च यानं युग्यं च सर्वशः ।
तत्र नागसहस्राणि हयानामयुतानि च ।
फल्गु सर्वं कलत्रं च यत्किंचित्कृशदुर्बलम् ॥ २६ ॥
कोशसंचयवाहांश्च कोष्ठागारं तथैव च ।
गजानीकेन संगृह्य शनैः प्रायाद्युधिष्ठिरः ॥ २७ ॥

तमन्वयात्सत्यधृतिः सौचित्तिर्युद्धदुर्मदः ।
श्रेणिमान्वसुदानश्च पुत्रः काश्यस्य वा विभुः॥२८॥
रथा विंशतिसाहस्रा ये तेषामनुयायिनः
हयानां दशकोट्यश्च महतां किङ्किणीकिनाम् ॥२९॥
गजा विंशतिसाहस्रा ईषादन्ताः प्रहारिणः ।
कुलीना भिन्नकरटा मेघा इव विसर्पिणः ॥ ३० ॥
षष्टिर्नागसहस्राणि दशान्यानि च भारत ।
युधिष्ठिरस्य यान्यासन्युधि सेना महात्मनः॥३१॥
क्षरन्त इव जीमूताः प्रभिन्नकरटामुखाः ।
राजानमन्वयुः पश्चाच्चलन्त इव पर्वताः ॥ ३२ ॥
एवं तस्य बलं भीमं कुन्तीपुत्रस्य धीमतः ।
यदाश्रित्याथ युयुधे धार्तराष्ट्रं सुयोधनम् ॥ ३३ ॥
ततोऽन्ये शतशः पश्चात्सहस्रायुतशो नराः ।
नर्दन्तः प्रययुस्तेषामनीकानि सहस्रशः ॥ ३४ ॥
तत्र भेरीसहस्राणि शंखानामयुतानि च ।
न्यवादयन्त संहृष्टाः सहस्रायुतशो नराः ॥ ३५ ॥

इति श्रीमहाभारते उद्योगपर्वणि षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

समाप्तमम्बोपाख्यानपर्व । समाप्तं चोद्योगपर्व ।

---

अस्यानन्तरं भीष्मपर्व भविष्यति तस्यायं प्रतिसंधिः—

जनमेजय उवाच—
कथं युधिष्ठिरो वीराः कुरुपाण्डवसोमकाः ।
पार्थिवाः सुमहात्मानो नानादेशसमागताः ॥ १ ॥

---

[ नील० ] शकटा भाण्डवन्ति अनांसि आपणो वणिक्समुदायः वेशो वेश्याजनः यानं युद्धयोग्यं वाहनं युग्यं केवलं वाहनं फल्गु बालादिकं कलत्रं स्त्र्यादिकम् ॥ २६ ॥ कोशो धनं कोष्ठो धान्यादिसामग्री संगृह्य एकीकृत्य ॥ २७ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

[ अर्जु० ] क्षुद्विनिस्तनं क्षुद्विप्रभवं प्रभिन्नकरटामुखाः गण्डस्रवन्मदाः ॥ ३२ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

[ सर्व० ] गणशो वादयन्तीत्यन्वयः ॥ ३४ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृत व्याख्यायां षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

विदुषामस्तु सर्वज्ञश्रीनारायणनिर्मितः ।
भारतार्थप्रकाशोऽयमुद्योगार्थप्रकाशकः ॥ १ ॥

## अर्जुनमिश्रकृतटीकान्ते परिशिष्टम् ।

अत्र प्रजागरसनत्सुजातीयानन्तरं ऋषिरुक्तवे 'विषं भुङ्क्ष्व' इत्यादि पद्यमस्ति तत्तु सर्वज्ञनारायणमतमनस्तदपि विव्रियते । अगृहीतानुनये दुर्योधने स्वयं जिगमिषु कुद्धः सन् मैत्रेयः श्लिष्टवाक्येन धृतराष्ट्रमाक्षिपति । विषं भुङ्क्ष्व सहामात्यैर्विनाशं प्राप्नुहि ध्रुवम् । राजन् येन विना नाभ्यां स्त्रीनं कृष्णाजिनं वरम् ॥ अस्यार्थः । भो राजन् धृतराष्ट्र स्त्रीनं भुङ्क्ष्व कृष्णाजिनं वरमुत्कृष्टं भुङ्क्ष्व पालय । कृष्णाजिनं विभूने विषं विगतप्रकारं मह सार्वभमात्यैः कर्णादिभिः तथा येन विना ककारेण विना, नाभ्यां नकाराभ्यां विना । एवम् कृआजिअमिति स्थिते सन्धौ कृते राज्यमिति निष्पद्यते । न केवलं राज्यं भुङ्क्ष्व सं कल्याणं प्राप्नुहीत्यर्थः । दूषणार्थस्तु भो राजन् विषं हालाहलं भुङ्क्ष्व भक्षय । अमात्यैः शकुनिप्रभृतिभिः सह । तेन किं स्यात् तत्राह—विनाशं प्राप्नुहि ध्रुवं निश्चितं, किमिति पुरा वर्तमानं पुत्रादिविनाशं पश्यसीति भावः ॥ आत्मघातस्य निषिद्धत्वात् एवंचेत् दूरपे तदा येन मार्गेन राज्यदानप्रत्यायता विना नाभ्या-

# 'गुजराती' मुद्रणालयस्थानि कान्यसंस्कृतपुस्तकानि।

मूल्यं मार्गव्ययः

१ श्रीमद्भगवद्गीता। प्रथमो गुच्छः Bhagavat Geeta with 7 commentaries श्रीमच्छङ्कराचार्यविरचित भाष्यम्, आनन्दगिरिकृत शाङ्करभाष्यव्याख्यानम्, आनन्दतीर्थीय (मध्व) भाष्यम्, जयतीर्थविरचिता प्रमेयदीपिका टीका, रामानुजभाष्यम्, पुरुषोत्तमजी प्रकाशिता अमृततरङ्गिणी, नीलकण्ठविरचितो भावप्रदीपः, एतैः समेता मञ्जुलैरायसाक्षरैर्मुद्रिता पृष्ठान्यष्टशतपरिमितानि सुचिक्कणानि। मू० रु. ... ... ... ... . ... ६–०–० ०–७–०

२ श्रीमद्भगवद्गीता। द्वितीयो गुच्छः Bhagavat Geeta with 8 commentaries— निम्बार्कमतानुयायिश्रीकेशवकाश्मीरिभट्टाचार्यपादप्रणीता–'तत्त्वप्रकाशिका,' श्रीमधुसूदनसरस्वतीकृता—'गूढार्थदीपिका,' श्रीशङ्करानन्दप्रणीता–'तात्पर्यबोधिनी,' श्रीधरस्वामिकृता–'सुबोधिनी,' श्रीसदानन्दविरचित–'भावप्रकाशः,' श्रीधनपतिसूरिविरचिता—'भाष्योत्कर्षदीपिका,' दैवज्ञपण्डितश्रीसूर्यविरचिता–'परमार्थप्रपा,' पूर्णप्रज्ञमतानुसारिश्रीराघवेन्द्रकृतः–'अर्थसंग्रहः' इत्येताभिर्व्याख्याभि. सहिता। अत्र श्लोकाः स्थूलतमाक्षरैष्टीकाश्च स्थूलाक्षरैर्मुद्रिता', द्रष्टा मा क्लेशिषतेति। मू. रु. ... ... ... ... ... ... १०–०–० ०–१२–०

३ उत्तरगीता Uttara-Geeta with Gaudapadiya commentary गौडपादीयदीपिकाख्यव्याख्यायुता भगवत्पादश्रीशङ्कराचार्याणां परमगुरुभिः श्रीशुकाचार्याणां च शिष्यैः श्रीगौडपादाचार्यैः प्रणीतेन व्याख्यानेनैतावत्कथनमलमस्या महिमानमवगमयितुम्। मूल्यम् रु. ... ०–३–० ०–०–६

४ श्रीमद्वाल्मीकिरामायणम्। Valmiki Ramayana with 3 well-known *commentaries सर्वतन्त्रस्वतन्त्रप्रतिभेन शब्देन्दुशेखरादिनानानिबन्धप्रणेत्रा श्रीमन्नागेशभट्टेन स्व*शिष्यस्य सतो जीविकाप्रदातुः शृङ्गवेरपुराधीशस्य वीरमणेः श्रीरामराजस्य नाम्ना प्रणीतया रामायणतिलकाख्यया टीकया, पण्डितश्रीवंशीधर–शिवसहायाभ्यां प्रणीतया रामायणशिरोमण्याख्यया टीकया, श्रीगोविन्दराजप्रणीतया भूषणाख्यया टीकया च सहितम्। चतुर्धा विभज्य बद्धम्। पृ. सं. ३०८२ ... ... ... ... ... ३०–०–० ३–६–०

बालकाण्डम्। Bal Kand उपरिनिर्दिष्टटीकात्रयोपेतम्। मूल्यम् रु. ... ... ३–०–० ०–५–०

अयोध्याकाण्डम्। Ayodhya Kand उपरिनिर्दिष्टटीकात्रयोपेतम्। मू. रु. ... ... ५–०–० ०–७–०

अरण्यकाण्डम्। Aranya Kand उपरिनिर्दिष्टटीकात्रयोपेतम्। मू. रु. ... २–१२–० ०–४–०

किष्किन्धाकाण्डम्। Kishkindha Kand उपरिनिर्दिष्टटीकात्रयोपेतम्। मू. रु. ... ... ... ... ... ... ... ... २–१०–० ०–४–०

सुन्दरकाण्डम्। Sundar Kand उपरिनिर्दिष्टटीकात्रयोपेतम्। मू. रु. ... ३–०–० ०–४–०

युद्धकाण्डम्। Yuddha Kand उपरिनिर्दिष्टटीकात्रयोपेतम्। मू. रु. ... ८–०–० ०–८–०

उत्तरकाण्डम्। Uttara Kand उपरिनिर्दिष्टटीकात्रयोपेतम् मू. रु. ... ... ६–०–० ०–६–०

५ स्तोत्रमुक्ताहारः–Stotra-Muktahar containing 256 stotras अस्मिन् २५६ स्तोत्राणि सगृहीतानि। यद्यपि सन्ति भूरीणि स्तोत्रपुस्तकानि मुद्रितानि भूरिभिस्तथापि न तेष्वियता स्तोत्ररत्नानां सग्रहः। अस्माभिः पूर्वममुद्रितानां स्तोत्राणां पुस्तकानि काश्यादिदेशेभ्यो भूयसा प्रयासेन द्रविणव्ययेन च समासाद्य तेभ्यश्च प्रसादगुणयुक्तानि स्तोत्राणि सङ्कलय्य संशोध्य च तानि भाविकजनानां कृतेऽत्र समावेशितानि तदाशास्महे श्रद्धावन्तो जनाः सफलयिष्यन्ति प्रयत्नमस्माकममुमिति। मूल्यम् रु. ... ... ... ... ... ... ... ०–१२–० ०–२–०

६ स्तोत्रमुक्ताहारः—Stotra-Muktahar 2nd part containing 159 stotras द्वितीयो भागः। स्तोत्रसंख्या २५७–४१६ मूल्यम् रु. ... ... ... ... ०–१२–० ०–२–०

७ संस्कारमयूखः—Samskar Mayukha मीमांसकनीलकण्ठभट्टसुतशङ्करभट्टकृतः। अत्र संस्काराणां स्वरूप कालः इतिकर्तव्यता वर्णधर्मा आश्रमधर्माश्च विस्तरतो मूलवचनोपन्यासपुरःसर निरूपिताः। मूलवचनानि चाप्रतिपत्तिविप्रतिपत्तिसंभावनास्थलेषु क्रमेण पर्यायशब्दप्रदर्शनेनमीमांसकाभिमतन्यायानुसरणेन च व्याख्यातानि। अन्ते कातीयसूत्रानुसारिप्रयोगाश्च दत्ताः। पूर्वं वाराणस्यादिषु मुद्रितोऽप्ययं वर्णपदवाक्यभ्रंशविपर्ययादिदोषप्रचुरतयाऽविभक्तविषयतया च भृशं दुर्बोधो

विपरीतबोधकरथासीत् । अस्माभिस्तु ग्रन्थकृतैव पुनः शोधितस्य वर्धितस्य चास्य ग्रन्थस्य पुस्तक- मूल्यं मार्गव्ययः
मासाद्य विषयांश्च प्रविभज्य शोधने च महान्तमायासमास्थाय मुद्रितः । मू. रु. ... ... ०-१२-० ०-१-०

८ आचारमयूखः—Achara Mayukha नीलकण्ठभट्टकृत प्रातःस्मरणादिशयनान्तस्याह्निक-
क्रियाकलापस्य निरूपणपरो ग्रन्थः । मूल्यम् रु. ... ... ... ... ... ०-८-० ०-१-०

९ समयमयूखः—Samaya Mayukha नीलकण्ठभट्टकृतः विहितकर्मणां कालस्य निर्णायकः मू.रु. १-४-० ०-१-०

१० श्राद्धमयूखः—Shraddha Mayukha नीलकण्ठभट्टकृत ... ... ... १-४-० ०-१-०

११ नीतिमयूखः—Niti Mayukha in the press ... ... ... ...

१२ व्यवहारमयूखः—Vyavahar Mayukha in the press ... ...

१३ मनुस्मृतिः—कुल्लुकभट्टकृतटीकया ManuSmriti with a commentary by
Kulluka Bhatta ग्रन्थान्तरेषु मनुनाम्नोल्लिखितैरिदानींतनमनुस्मृतिपुस्तकेष्वनुपलभ्यमानैः श्लोकैः,
पद्यानां वर्णानुक्रमकोशेन, विषयानुक्रमेण च सहिता सूक्ष्मेक्षिकया संशोधिता च । मू. रु. ... १-८-० ०-३-०

१४ विदुरनीतिः—Vidura-Niti with a commentary संस्कृतटीकोपेता नीतिशा-
स्त्राभ्यासिनां विद्यार्थिनामतीवोपयोगिनी । मू. रु. ... ... ... ... ... ०-४-० ०-१-०

१५ वेदान्तरहस्यम्—Vedanta Rahasya वेदान्तवागीशभट्टाचार्यविरचितम् । अत्राद्वै-
तमतसिद्धान्तो निरूपितः । उपपत्तिश्च प्रदर्शिता । भाषाऽतिसरला प्रौढा च । मूल्यम् रु. ... ०-१-० ०-६-०

१६ विशिष्टाद्वैतमतविजयवादः—VishishtAdvaita-Mata-Vijaya-
Vada नरहरिपण्डितकृत. । अत्र विशिष्टाद्वैतमते परेषामाक्षेपान्निराकृत्य विशिष्टाद्वैत एवोपनिषदां
तात्पर्यं व्यवस्थापितम् । मू. रु. ... ... ... ... ... ... ०-१-० ०-६-०

१७ रघुवंशमहाकाव्यम्—Raghuvamsha of Kalidas with Mallinatha's
commentary श्रीकालिदासकृतम् मल्लिनाथकृतसंजीविन्याख्यटीकासहितम् । मू. रु. ... ०-१०-० ०-३-०

१८ रघुवंशमहाकाव्यं—Only First Five Sargas of the same with a commentary
by Mallinatha मल्लिनाथकृतटीकोपेतम् । सर्गा. १-५ मूल्यम् रु. ... ... ... ०-४-० ०-१-०

१९ कुमारसंभवं महाकाव्यम्—Kumar Sambhav of Kalidas with 3 known
commentaries कविवरश्रीकालिदासविरचितमिदं सप्तमसर्गपर्यन्तं मल्लिनाथकृतसंजीविन्या चा-
रित्र्यवर्धनकृतशिशुहितैषिण्या च सवलितं, तत आसमाप्ति सीतारामकृतसंजीविन्याऽलंकृतं
सुललितैरायसाक्षरैर्मुद्रितमतीव दर्शनीयमस्ति । मू. रु. .. ... ... ... १-४-० ०-२-०

२० कारिकावली सिद्धान्तमुक्तावलीसहिता-Karikavalee with Siddhanta
Muktavali and other notes न्यायवैशेषिकदर्शनयोर्व्युत्पित्सूनां कृते प्रणीतेषु प्रकरणग्र-
न्थेषु सिद्धान्तमुक्तावलीसमुद्भासिता कारिकावली मूर्धाभिषिक्तेत्यत्र न विदुषां वैमत्यं किंतु तत्र
दीधितिकृदुपसृतया विवेकसरण्या संक्षेपतः सूक्ष्मतमानामर्थानामुपनिबद्धतया प्रायः खिद्यन्ति
नव्यारम्भाः, इति तेषामुपकारायास्माभिः प्रायः सर्वेषु विषमस्थलेष्वतिविस्तृता सरला सुबोधा
च टिप्पणी पण्डितजीवरामशास्त्रिभिः कारयित्वा तया सहैव दृढतरेषु सुचिक्कणेषु पत्रेषु स्थूलाक्षरैर्मु-
द्रिता । सार्धशताभ्यधिकपत्रयुतामपीमां सर्वसौलभ्यायाल्पीयसा मूल्येन वितरामः । मू. रु. ... ०-७-० ०-१-०

२१ वैशेषिकदर्शनम्—Vaisheshika Darshana with several commen-
taries श्रीशंकरमिश्रकृत—वैशेषिकसूत्रोपस्कार—जयनारायणतर्कपञ्चाननभट्टाचार्यप्रणीत—
विवृति-चन्द्रकान्तभट्टाचार्यप्रणीत—भाष्यसहितम् । मू. रु. ... ... ... ... २-०-० ०-३-०

२२ वादार्थसंग्रहः ( प्रथमो भाग )—Vadartha Sangraha First Part अत्र
शेषकृष्णकृतं स्फोटतत्त्वनिरूपणं, श्रीकृष्णमौनिकृता स्फोटचन्द्रिका, गोडबोलेकृतः प्रातिपदिकसं-
ज्ञावादः, वाक्यवादः, हरियशोमिश्रकृता वाक्यदीपिकेति पञ्च ग्रन्थाः संकलिताः । पण्डितानां
प्रौढच्छात्राणां च बहुतरमुपकारकः । मू. रु. ... ... ... ... ... ०-६-० ०-०-६

२३ वादार्थसंग्रहः (द्वितीयो) भाग –Vadartha-Sangraha Second Part अत्र
भवानन्दसिद्धान्तवागीशकृत षट्कारकविवेचनम्, जयरामभट्टाचार्यकृतः कारकवादः समासवादश्च,
एवकारवादश्चेति चत्वारो ग्रन्थाः सन्ति । मू. रु. ... ... ... ... ... ०-६-० ०-०-६

२४ वादार्थसंग्रहः ( तृतीयो भाग. )—Vadartha-Sangraha Third Part अत्र
कृष्णाचार्यकृत 'वादसुधाकरः' मौनिश्रीकृष्णकृतः 'लघुविभक्त्यर्थनिर्णयः' रामकिशोरकृता—
'शाब्दबोधप्रकाशिका' चेति प्राचीनानां त्रयो ग्रन्थाः सन्ति । मू. रु. ... ... ०-८-० ०-१-०

२५ न्यायबिन्दुः—**Nyayabindu** with a commentary by Vaidyanatha पूर्वमीमांसायाः अधिकरणार्थसंग्राहको ग्रन्थः। तन्मतुगाश्रवभट्टवैद्यनाथकृतः। टिप्पणीसहितः। मू. रु.... मूल्यं मार्गव्यय १-४-० ०-२-०

२६ महाभागवतम्—**Maha Bhagavata** Devi Puran देवीपुराणम् । अस्मिन् भगवत्या ब्रह्मस्वरूपिण्या महाकाल्या दाक्षायणी—गङ्गा—पार्वती—श्रीकृष्णेत्यवतारचतुष्टयचरितानि, महाकाल्या मूलस्थान च प्रधानतयोपवर्णितानि। प्रह्लादामचरित स्कन्दचरित पाण्डवचरित गणेशोत्पत्तिगङ्गावतरण भगवतीगीता ललितासहस्रनाम शिवसहस्रनामादयश्च विषया निरूपिता.। सार्धसप्तसाहस्री संहितेयम्। मू. रु. ... ... ... ... ... ... २-०-० ०-३-०

२७ तैत्तिरीयोपनिषत्—**Taittiriya-Upanishat** with Bhashya of Shri Shankaracharya and a commentary by Anandgiri श्रीमच्छङ्करभगवत्पादकृतभाष्येणानन्दगिरिकृतटीकायुतेन तैत्तिरीयविद्याप्रकाशेन च सहिता । मूल्यम् रु. ... ... १-०-० ०-२-०

२८ दशरूपकम्—**Dasha Rupaka** with commentaries नाट्यशास्त्र धनञ्जयविरचितमूलश्लोकसहित पवनदीयपण्डितसुदर्शनाचार्यप्रणीतप्रभाख्यव्याख्यासहित च । मू. रु. ... १-०-० ०-२-०

२९ ब्रह्मसूत्रवृत्तिः—**Brahma Sutra Vritti** अद्वैतमञ्जरी । भगवत्पाद (आचार्यशङ्कराचार्य) शिष्यकृता । मूल्यम् रु. ... ... ... ... ... ... ... ०-१२-० ०-२-०

३० चन्द्रालोकः—**Chandraloka** with a commentary श्रीपीयूषवर्षजयदेवकविविरचितोऽलङ्कारग्रन्थः। पायगुण्डोपाह्वैद्यनाथ (बाळम्भट्ट) विरचितरमाख्यव्याख्यासहितः। मूल्यम् रु. ... ०-८-० ०-१-०

३१ श्रीमहाभारतविराटपर्व-**Mahabharata-Virata Parva** with eight commentaries नीलकण्ठकृतभारतभावदीप—अर्जुनमिश्रकृतदीपिका—चतुर्भुजमिश्रकृतप्रकाश—सर्वज्ञनारायणकृतभारतार्थप्रकाश—विमलबोधकृत दुर्घटार्थप्रकाशिनी—रामकृष्णकृतविरोधार्थभञ्जनी—विषमपदविवरण—वादिराजतीर्थविरचितलक्षालङ्कारेत्यष्टटीकोपेत विपुलपाठभेदसहित च । मू. रु. ... ... ... ... ... ... ... ... ३-८-० ०-६-०

३२ श्रीमहाभारत उद्योगपर्व—**Udyoga Parva** with five commentaries ८-८-० ०-१०-०

३३ चम्पूभारतम्-**Champubharata** with a commentary by Narayanasuri श्रीखण्डे इत्युपाह्वनारायणसूरिविरचितटीकासहितम्। मू रु. ... ... ... ... २-०-० ०-२-०

३४ उपदेशसाहस्री—**Upadeshasahasri** of Shri Shankaracharya with a commentary श्रीमच्छङ्कराचार्यकृता रामतीर्थकृतपदयोजनिकाटीकासहिता। विषयानुक्रमणिकया, श्लोकानुक्रमणिकया, नैष्कर्म्यसिद्धिस्थश्लोकप्रदर्शनेन, अन्योदाहृतग्रन्थान्तरस्थवाक्यानुक्रमणिकया, शुद्धिवृद्धिभ्यां च सहिता। मू. रु. ... ... ... ... ... ... ... ... १-८-० ०-२-०

३५ पारस्करगृह्यसूत्रम्—**Paraskar Grihya-Sutra** with numerous Bhashyas some of which were either not published or unavailable, as well as Sutras etc. श्रीकर्कोपाध्याय—जयराम—हरिहर—गदाधर—विश्वनाथप्रणीत—भाष्यपञ्चकसनलकृतम्—कामदेवभाष्यसहितवाप्यादिप्रतिष्ठाकण्डिका—शौचसूत्र—हरिहरभाष्योपेतस्नानसूत्र—कर्क-गदाधरकृतभाष्य—कृष्णमिश्रकृतश्राद्धकाशिकोपेतश्राद्धसूत्र-भोजनसूत्रपरिशिष्टसहित च मू. रु. ... ६-८-० ०-८-०

३६ कुट्टिनीमतम्—**Kuttini Mata** with a commentary (in the press) ...

३७ नागरसर्वस्वम्—**Nagar Sarvaswam** (in the press)

३८ जैमिनीन्यायमालाविस्तरः—**Jaimini Nyaya Mala** (in the press)

## हिन्दी—HINDI

३९ चन्द्रकान्त—**Chandrakanta** (Hindi) (First Part) (वेदान्त ज्ञानका मुख्यग्रन्थ) प्रथम भाग. यह वह ग्रन्थ है कि, जो नितान्त निर्भ्रान्त वेदान्त सिद्धान्तका एकात प्रतिपादक "चन्द्रकान्त" मणि बम्बई प्रान्तके प्रसिद्ध साप्ताहिक 'गुजराती' पत्रके मुख्य-आद्य संपादक गुजराती भाषाके सुविख्यात लेखक, अनेक ग्रन्थोंके निर्माता देशभक्त धुरीण, सारासारविवेकप्रवीण, वैश्यकुलभूषण श्रीमान् शेठ इच्छाराम सूर्यराम देसाईके शुद्ध हृदयमें दैदीप्यमान प्रबोधरत्नभाण्डागारका चमचमाता हुआ एक अमूल्य रत्न है. कि रु. ... ... ... २-८-० ०-४-०

४० चन्द्रकान्त-**Chandrakanta**(Hindi) 2nd part ... ... ... ३-०-० ०-५-०

४१ चन्द्रकान्त—**Chandrakanta** (Hindi) 3rd part in the press

४२ युक्तिप्रकाश—**Yukti Prakasha** (Hindi) विचारसागरका कर्ता साधु श्रीनिश्च-

मूल्यं मार्गव्ययः

दासजीने किया हुआ यह ग्रन्थ हिन्दुस्तानी भाषामें है. इसमें वेदान्तके ३९ सिद्धान्त बहुत अच्छीतरहसे सिद्ध किये गये हैं. निश्चलदासकी वाणी सब जिज्ञासुलोकोंको ज्ञात होनेसे विशेष निरूपणकी कुछ जरूरत है नहीं. और जिज्ञासुलोकोंको ये ग्रन्थ बहुत उपयुक्त हैं. पक्की जिल्द और अच्छा कागज. मूल्यं रू. ... ... ... ... ... ... १-०-० ०-२-०

## मराठी—MARATHI

४३ चन्द्रकान्त—**Chandrakanta** ( Marathi ) या सुप्रसिद्ध गुजराती पुस्तकाच्या गुजराती भाषेमध्यें आजपर्यंत आठ आवृत्ति प्रसिद्ध झाल्या आहेत. आणि हिन्दीभाषा जाणणारे रसिकलोक याच्या प्रथम भागाचा रसास्वाद घेत असून दुसऱ्या भागाचा आस्वाद घेण्याकरितां अत्यंत उत्सुक झाले आहेत. हा ग्रन्थ "गुजराती" साप्ताहिकाचे प्रसिद्ध सद्गत् तंत्री **इच्छाराम सूर्यराम देसाई** यांनी लिहिलेला आहे. अशा या ग्रन्थाचें मराठी भाषा जाणणाऱ्या मुमुक्षुजनांकरितां रा. रा. एस्. आर. यानेकर यांनीं मराठी भाषान्तर केलें असून त्यांत ठिकठिकाणीं मूलग्रन्थाला अनुसरून प्रमाणरूप असलेलीं सत्पुरुषांचीं वचनें देऊन या पुस्तकाची योग्यता व उपयुक्तता वृद्धिंगत केली आहे. या पुस्तकाच्या वाचनानें हिन्दी व गुजराती लोकांच्या जीवनकर्मांत फारच सुधारणा झाली आहे. सरळ व सुबोध उपदेश, गोष्टी यांच्या द्वारानें वेदान्तशास्त्र, ज्ञान, कर्म, व भक्तिमार्ग यांच्या प्राप्तीला याशिवाय दुसरा योग्य असा ग्रंथ मराठी भाषेमध्यें क्वचितच मिळेल. किंमत रु. ... ... ३-०-० ०-४-०

४४ चन्द्रकान्त—**Chandrakanta** ( Marathi ) 2nd part in the press ...

'गुजराती' मुद्रणालयाधिपतिः।
कोट सर्कल सासूनबिल्डिंग-मुंबई.

☞ हमारा गुजराती पुस्तकके सूचीके लिये पत्र भेजना.